समर्थो बभूव। कूटयुद्धे तु अधिकसैन्यस्य अधिककालस्य वा नापेक्षणीयत्वमिति भावः। 'अल्पोदेशस्तु कालो वा प्रबभूवात्ययोदये' इत्यत्र 'अन्योदेशस्तु कालो वा प्रभूतौ चात्ययव्ययौ' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० ॥ १६ श्लो० ॥१६॥

भृतबलोपादानकालमभिधातुमाह, श्रान्तेति। 'श्रान्तोपजापविश्वस्तं' 'श्रान्तं' युद्धक्लेशादिभिरुपक्लिष्टं, 'उपजापविश्वस्तं' 'उपजापेन' विजिगीषुकृतभेदेन, 'विश्वस्तं' आत्मसात्कृतत्वात् विश्वासयोग्यं, 'परस्य सैन्यं' यातव्यस्य बलं, 'भृतैर्बलैः' वेतनोपग्रहीतैर्बलैः सह, यायादिति शेषः। 'अल्पप्रसारः' 'अल्पः' स्तोकः, 'प्रसारः' सर्व्वतः सैन्याभिव्याप्तिर्यस्य स तथाभूतः यातव्यः, 'हन्तव्यः' अनायासेन विनाशयितव्यः, 'इत्युपेक्ष्य' इत्युपेक्षां कृत्वा, भृतैर्बलैर्यायादिति सम्बन्धः। यत्र यातव्यसैन्यं श्रान्तोपजापविश्वस्तं तत्र यत्र च यातव्यः अल्पप्रसारः तत्रापि भृतैर्बलैर्यायादिति भावः। 'श्रान्तोपजापविश्वस्तं' इत्यत्र 'श्रान्तोपजापाद्विश्वस्तमिति, 'इत्युपेक्ष्य' इत्यत्र 'इत्युपेक्षा' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० १७ श्लो० ॥१७॥

श्रेणिबलोपादानकालमभिधातुमाह,स्फीतमिति। 'क्रुस्वप्रवासव्यायामात्' 'क्रुस्वात्' अल्पात्, 'प्रवासात्' यातव्यदेशप्रवासात्, 'व्यायामात्' युद्धक्लेशात्, 'स्फीतं' समृद्धं, 'श्रेणिबलं' सङ्घधर्म्मेण व्यवस्थितं सैन्यं, 'यानवर्त्मनि' प्रयाणपथि, 'आधातुं' संस्थापयितुं, 'शक्यं' योग्यं, 'इति' इतिविविच्य, 'सैन्यं' श्रेणिबलं, 'समुत्पतेत्' समुपादाय गच्छेदित्यर्थः। 'श्रेणि' इत्यत्र 'श्रेणि' इति 'यानवर्त्मनि' इत्यत्र 'पानवर्त्मनि' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० १८ श्लो० ॥ १८॥

सुहृद्बलोपादानकालमभिधातुमाह, सुप्रभूतमिति। 'सुप्रभूतं' सुसमृद्धं, 'सुहृत्सैन्यं' मित्रबलं, 'आत्मनि' आत्मकार्य्यसम्पादने, 'आधातुं' स्थापयितुं, निर्वैरं कर्त्तुमिति यावत्। 'शक्यं', 'मन्त्रेण' कूटयुद्धेन, 'अल्पयुद्धं' अल्पप्रयाससाध्यं युद्धं, चेत् तदा 'अल्पमेव' स्तोकमेव, 'सुहृत्सैन्यं', 'आत्मनि आधातुं शक्यं', 'इति' एवम्भूते काले, 'सुहृद्बलैः' मित्रबलैः सह, याया-

दिति वाक्यशेषः। यत्र युद्धस्य बहुप्रयाससाध्यत्वेपि सुहृत्सैन्यस्य सुसम्बद्धत्वं तत्र यत्र सुहृत्सैन्यस्य अल्पत्वेपि मन्त्रेण युद्धस्याल्पत्वं तत्र च सुहृद्बलोपादानं कर्त्तव्यमिति भावः॥ १९ स० १९ श्लो०॥ १९॥

मित्रेति। 'मित्रसाधारणे' मित्रस्य आत्मनश्च समानफलोदये, 'कार्य्ये' कर्त्तव्ये, तथा 'मित्रायत्ते' मित्राधीने, 'फलोदये' फलप्राप्तौ, तथा 'अनुग्राह्ये च' अनुग्रहयोग्ये मित्रान्तरे च, 'पीड्ये' यातव्ये, 'मित्रैनैव सह', 'व्रजेत्' गच्छेत्, विजिगीषुरिति शेषः। 'पीड्ये च' इत्यत्र 'पाणिग्ये' इति मुद्रितपुस्तकपाठो न साधुः॥ १९ स० २० श्लो०॥ २०॥

द्विषद्बलोपादानकालमभिधातुमाह, प्रभूतेनेति। 'श्वसूकरवधापेक्षी' 'श्वभिः' कुक्कुरैः, सूकरवधं अपेक्षते यः स इव विजिगीषुः, 'प्रभूतेन' सम्बद्धेन, 'अरिसैन्येन' द्विषद्बलेन, सह 'महतः' बलवतः, 'रिपून्' शत्रून्, 'प्रेषयेत्' युद्धे नियोजयेत्। 'वा' अथवा, 'नयं वचनं' नीतियुक्तं वाक्यं, 'महतो रिपून्', 'नयेत्' प्रापयेत्। यथा चाण्डालाः श्वभिः सूकरान् विनाशयन्ति तथा महान्तः रिपवः अरिसैन्येनैव जेतव्या इति भावः॥ १९ स० २१ श्लो०॥ २१॥

अभ्युत्थितमिति। 'कोपभयात्' अपराधेन प्रभोः क्रोधभयात्, 'अभ्यासे' निकटे, 'अभ्युत्थितं' उपस्थितं, 'रिपोः' यातव्यस्य, 'बलं' सैन्यं, 'वासयेत्' स्वराज्ये निवासयेत् 'दुर्गकण्टकशोधनैः' यातव्यदुर्गकण्टकमर्दनैः, 'एनं' रिपुं, 'कर्षयेच्च' आकर्षयेच्च। 'अभ्युत्थितं' इत्यत्र 'अविचित्तं' इति मुद्रितपुस्तकपाठः, तादृशपाठे तु उपस्थितक्रियाध्याहारेण 'अविचित्तं' अविशुद्धचित्तं, सत् उपस्थितं इत्यर्थः। 'अभ्यासे तु' इत्यत्र 'अभ्यासेन' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० २२ श्लो०॥ २२॥

आटविकबलोपादानकालमभिधातुमाह, नित्यमिति। 'पण्डितः' नीतिज्ञः, 'दुर्गकण्टकशोधने' यातव्यदुर्गकण्टकमर्दने, 'परदेशप्रवेशे च' यातव्यजनदेशप्रवेशे च, 'नित्यं' सदा, 'आटविकं सैन्यं' प्रागुक्तलक्षणं बलं, 'पुरः' अग्रतः, 'कुर्वीत'। मुद्रितपुस्तके 'दुर्गकण्टकशोधने' इत्यत्र 'दुर्गकण्टक-

योधनैः' इतिपाठः, 'पुरः' इत्यत्र 'पुरा' इति पाठस्तु न समीचीनः ॥ १९ स० २३ श्लो० ॥ २३ ॥

उपसंहरन्नाह, एतन्मौलादीति। 'एतत्' प्रागुक्तं, 'मौलादिषड्वर्गं' मौल-भृत-श्रेणि-सुहृत्-द्विषदाटविकरूपं षड्विधं बलं, 'पदात्यश्वरथद्विपैः', 'चतुरङ्गबलं'। 'मन्त्र-कोषाभ्यां', 'षडङ्गञ्च', 'विदुः' ॥ १९ स० २४ श्लो० ॥२४॥

इतीति। 'बली' महाबलसम्पन्नोविजिगीषुः, 'इत्येतत् षड्विधं बलं', 'यथायोगं' यस्य बलस्य येन बलेन सह योगोयुज्यते तेन बलेन सह तद्बलं संयोज्य इत्यर्थः। 'सुनिश्छिद्रं' रन्ध्ररहितं, निर्दोषमिति यावत्, यथा स्यात् तथा 'प्रतिव्यूह्य' पररचितव्यूहस्य प्रत्यनीकभूतव्यूहं विरचय्य, 'प्रति बलं' परबलं, 'प्रति', 'यायात्' गच्छेत्। 'प्रतिबलमित्यत्र 'ज्यायोबलमिति मुद्रितपुस्तकपाठः। 'यथायोगं बलं' इत्यत्र 'यथायागबलं' इति मुद्रित-पुस्तकपाठो न सम्यक्॥ १९ स० २५ श्लो० ॥ २५ ॥

योगेति। 'नृपः' विजिगीषुः, 'अस्य' प्रागुक्तस्य षड्विधस्य, 'योगं' स्वकीयैः परकीयैर्व्वा सह सम्बन्धं, 'सर्व्वं' अशेषं, 'मन्त्रादिना' गूढ़पुरुषप्रणि-धानादिना, 'विजानीयात्'। तथा 'ज्ञाताज्ञातप्रचारं' सेनाभिः ज्ञातमज्ञातं वा प्रचारं कः कुत्र प्रचरतीति गत्यागत्यादिकं, 'विजानीयात्'। तथा 'सेनापतेरपि' 'सेना' सकलबलसमुदायः, तस्याः पतिः, तस्य ज्ञाताज्ञातप्रचा-रादिकं विजानीयादिति सर्व्वत्र सम्बन्धः ॥ १९ स० २६ श्लो० ॥ २६ ॥

सेनायालक्षणमभिधाय सेनापतेरपि सप्तदशश्लोकपरिकल्पितकुलकेन लक्षणमभिधातुमाह, कुलोद्गतमिति। 'कुलोद्गतं' विशुद्धोभयकुलोत्पन्नं, 'जानपदं' स्वजनपदभवं, 'मन्त्रज्ञं' पञ्चाङ्गमन्त्राभिज्ञं, 'मन्त्रिसम्मतं' मन्त्रिणा अभिमतं, 'यत्नतः', 'दण्डनीतेः' दण्डनीतिशास्त्रस्य, 'प्रयोक्तारं' प्रयोगनिपुणं, 'अध्येतारञ्च' अध्ययनशीलञ्च एवम्भूतं जनं 'ध्वजिनीपतिं कुर्वीत' इति परे-णान्वयः एवमुत्तरत्रापि 'मन्त्रिसम्मतं' इत्यत्र 'मन्त्रसम्मितमिति मुद्रित-पुस्तकपाठः ॥ १९ स० २७ श्लो० ॥ २७ ॥

सत्त्वेति। 'सत्त्व-शौर्य्य-क्षमा-धैर्य्य-माधुर्य्यार्य्यगुणान्वितं' 'सत्त्वं' बलं, 'शौर्य्यं'

पराक्रमः, 'क्षमा' सहिष्णुता, 'स्थैर्य्यं' स्थिरता, 'माधुर्य्यं' सौन्दर्य्यं, 'अर्थगुणाः' धैर्य्य—गाम्भीर्य्यादयः, तैः 'अन्वितं' युक्तं। 'प्रभावोत्साहसम्पन्नं' 'प्रभावः' प्रतापः, 'उत्साहः', ताभ्यां 'सम्पन्नं' युक्तं। 'आजीव्यमनुजीविनां' 'अनुजीविनां' आश्रितानां, 'आजीव्यं' आश्रयरूपं ॥ १९ स० २८ श्लो० ॥२८॥

मित्रवन्तमिति॥ 'मित्रवन्तं' 'मित्रं' सुहृत्, तत् विद्यते अस्य असौ मित्रवान् तं। 'उदारास्यं' विशालवदनं, 'बहुस्वजनबान्धवं' बहवः स्वजना बान्धवाश्च यस्य तं। 'व्यावहारिकं' व्यवहारज्ञं। 'अक्षुद्रं' महान्तं। 'पौरप्रकृतिसङ्गतं' 'पौरा' अग्राम्या, 'प्रकृतिः' स्वभावः, तया 'सङ्गतं' युक्तं। अथवा 'पौरप्रकृतिषु' पुरस्थितप्रजासु, 'सङ्गतं' मिलितं ॥ १९ स० २९ श्लो० ॥ २९ ॥

नित्येति। 'नित्याकारणवैराणामकर्त्तारं' चिरकालीनाकारणवैरकरणाप्रवृत्तं। 'अनाविलं' निर्म्मलं, निर्दोषमिति यावत्। 'श्रुतानुबन्धिकर्म्माणं' शास्त्रानुगतकर्म्मकारिणं। 'अल्पामित्रं' अल्पशत्रुं, 'बहुश्रुतं' बहुशास्त्रज्ञं ॥ १९ स० ३० श्लो० ॥ ३० ॥

आरोग्यमिति। 'आरोग्यं' अनामयं, अरोग एव आरोग्यः स्वार्थे ष्यञ्प्रत्ययः। 'आयतं' प्रांशुं। 'शूरं' शौर्य्यसम्पन्नं। 'त्यागिनं' दातारं। 'कालवेदिनं' कालज्ञं। 'कल्याणाकृतिसम्पन्नं' मनोज्ञाकारयुक्तं। 'स्वसम्भाव्यपराक्रमं' स्वानुभवनीयविक्रमं ॥ १९ स० ३१ श्लो० ॥ ३१ ॥

गजाश्वेति। 'गजाश्वरथचर्य्यासु शिक्षितं' गजाश्वरथानां, 'चर्य्यासु' गतिषु, 'शिक्षितं' प्राप्तशिक्षं। 'सुजितश्रमं' पराभूतपरिश्रमं। 'खड्गयुद्ध-नियुद्धेषु' खड्गयुद्ध-मल्लयुद्धेषु, 'शीघ्रचङ्क्रमणक्षमं' शीघ्रपुनःपुनर्भ्रमणशक्तं ॥ १९ स० ३२ श्लो० ॥ ३२ ॥

युद्धभूमीति। 'युद्धभूमिविभागज्ञं' युद्धोपयोगिस्थानविभागविदं, 'सिंहवद्गूढ़विक्रमं' सिंहवद्गर्ज्जनपराक्रमं। 'अदीर्घसूत्रं' अचिरक्रियं, 'निस्तन्द्रं' 'तन्द्रा' आलस्यं, तद्रहितं, 'अमर्षणं' अपमानासहिष्णुं, 'अनुद्धतं' अधृष्टं ॥ १९ स० ३३ श्लो० ॥ ३३ ॥

हस्त्यश्वेति। 'हस्त्यश्व-रथ-शास्त्राणां', 'सम्यगाभ्रन्तावेदिनं' सम्यक्परिज्ञं।

'चर-स्थिरविवेकज्ञं' 'चरस्य' गमनशीलगुप्तदूतस्य, 'स्थिरस्य' निश्चल-गुप्तदूतस्य 'विवेकज्ञं' प्रभेदज्ञं, 'कृतज्ञं' उपकाराङ्गीकर्त्तारं, 'अनुकम्पकं' दयालुं॥ १९ स० ३४ श्लो०॥ ३४॥

धर्म्मेति। 'धर्म्मकर्म्मसमायोगं' धर्म्मोपयोगिकर्म्मणा 'समायोगः' सम्बन्धः, यस्य तं। 'कुशलं' निपुणं, 'कुशलानुगं' निपुणानुगामिनं, 'सर्व्वयुद्धक्रियोपेतं' सर्व्वप्रकारयुद्धक्रियायुक्तं, 'सर्व्वशुद्धक्रियोपेतं' इतिपाठे सकलविशुद्धक्रिया-न्वितमित्यर्थः। 'तत्परिकर्म्मणि' 'तस्य' सर्व्वप्रकारयुद्धस्य, 'परिकर्म्मणि' प्रसाधनक्रियायां, 'शक्तं' समर्थं॥ १९ स० ३५ श्लो०॥ ३५॥

स्वभावेति। 'अश्व-नृ-दन्तिनां' 'अश्वानां' हयानां, 'नृणां' सैनिकपुरु-षाणां, 'दन्तिनां' गजानां, 'स्वभावचित्तज्ञतया युक्तं' स्वभावं चित्तञ्च जानाति यः तस्य भावः तया युक्तं। 'तन्नामान्यपि' 'तेषां' अश्व-नृ-दन्तिनां, 'नामा-न्यपि', 'वेत्तारं' ज्ञातारं, 'तद्विधानोपपादकं' 'तेषां' अश्वनृदन्तिनां, 'वि-धानं' नियमः, तस्य 'उपपादकं' सम्पादकं॥ १९ स० ३६ श्लो०॥ ३६॥

देशेति। 'देशभाषास्वभावज्ञं' नानादेशीयभाषास्वभावज्ञानसम्पन्नम्। 'लिपिज्ञं' नानादेशीयलिपिज्ञानसम्पन्नम्। 'सुदृढस्मृतिं' दृढतरस्मरणम्। 'निशाप्रचारकुशलं' रात्रिसञ्चारनिपुणम्। 'शकुनज्ञाननिश्चितं' निमित्तज्ञं, शुभाशुभचिह्नज्ञमिति यावत्। 'शकुनज्ञाननिश्चितं' इत्यत्र 'कुशलज्ञान-निश्चितं' इति मुद्रितपुस्तकपाठे तु बहूनां मध्ये 'कुशलस्य' निपुणस्य, ज्ञान-युक्तमित्यर्थः॥ १९ स० ३७ श्लो०॥ ३७॥

उदयास्तेति। 'तद्विशेषवित्' 'तेषां' दिग्देशमार्गाणां, 'विशेषवित्' विशे-षज्ञं यस्य तं। भावे तप्रत्ययः। अन्यत् प्रतीतम्॥ १९ स० ३८ श्लो०॥ ३८॥

क्षुत्पिपासेति। 'अनाहितभयग्लानिं' 'अनाहिता' अनुत्पन्ना, 'भयं' त्रासः, 'ग्लानिः' क्लान्तिश्च, यस्य तं। अन्यत् प्रतीतम्॥ १९ स० ३९ श्लो०॥ ३९॥

भेत्तारमिति। 'परसैन्यानां' यातव्यसैन्यानां, 'भेत्तारं' भेदकर्त्तारं। 'दुःसाध्याहितनिश्चयं' 'दुःसाध्यस्य' साधयितुमशक्यस्य, 'आहितनिश्चयं'

कृतोपायनिश्चयं । 'भग्नानाञ्च' भयेन पराजितानाञ्च, 'भयानाञ्च' इति पाठे भीतानाञ्च । 'सम्यग्विस्रम्भलक्षणं' सम्यक्प्रतिरोधकम् ॥ १९स०४०श्लो०॥४०॥

अवस्कन्देति । 'अवस्कन्दस्य' शिविरस्य, 'अभिगोप्तारं' सम्यक्रक्षितारं । 'वेत्तारं सैन्यकर्म्मणां' सैन्यकर्म्माभिज्ञं । 'वेत्तारं' इत्यत्र 'भेत्तारं' इति मुद्रितपुस्तकपाठो न सम्यक् । 'चरदूतप्रचारज्ञं' 'चरस्य' गुप्तदूतस्य, 'दूतस्य' सामान्यतोवार्त्तावाहकस्य, 'प्रचारज्ञं' सञ्चारज्ञं । 'महारम्भफलोपगं' 'महारम्भफलं' महता उद्योगेन लभ्यं, फलं, 'उपगच्छति' स्वीकरोति यस्तं । बह्वायाससाध्यफलप्राप्तावपि कृतोद्योगमिति भावः ॥ १९ स० ४१ श्लो० ॥ ४१ ॥

शश्वदिति । 'शश्वत्' सदा, 'संसिद्धकर्म्माणं' संसिद्धं 'कर्म्म' अनुष्ठानं, यस्य तं॰। 'सिद्धकर्म्मनिषेवितं' सिद्धं कर्म्म येषां तैः निषेवितं । 'पराभवेष्वनिर्व्विण्णं' 'पराभवेषु' पराजयेषु, 'अनिर्व्विण्णं' निर्व्वेदरहितं, 'परापरेषु निर्व्विण्णमिति मुद्रितपुस्तकपाठे तु 'परापरेषु' प्रधानाप्रधानेषु, 'निर्व्विण्णं' खिन्नं, यथा प्रधानेषु बलेषु निर्व्विण्णेषु निर्व्विण्णं तथा अप्रधानेष्वपि बलेषु निर्व्विण्णेषु निर्व्विण्णं इति यावत् । 'श्रीमद्राज्यार्थतत्परं' 'श्रीमतः' राज्ञः, विजिगीषोरिति यावत्,'राज्यार्थे' राज्यरूपविषये, 'तत्परं' व्यग्रं ॥ १९ स० ४२ श्लो० ॥ ४२ ॥

इत्यादीति । 'इत्यादिलक्षणोपेतं' प्रागुक्तलक्षणाक्रान्तं, 'ध्वजिनीपतिं' सेनापतिं, 'कुर्व्वीत' । 'सः' ध्वजिनीपतिः, 'सदा' सर्व्वदा, 'उद्युक्तः' कृतोद्योगः, सन्, 'दिवानिशं' दिवारात्रं, 'ध्वजिनीं' सेनां, 'गोपयेत्' रक्षेत् । 'स गोपयेदित्यत्र 'संगोपयेत्' इति मुद्रितपुस्तकपाठः ॥ १९ स० ४३ श्लो० ॥ ४३ ॥

नद्यद्रीति । 'व्यूहीकृतैर्बलैः' व्यूहरचितैर्बलैः । अन्यत् प्रतीतं ॥ १९ स० ४४ श्लो० ॥ ४४ ॥

स्कन्धावारप्रयाणमभिधातुमाह, नायक इति । आतावेकवचनं । 'नायकः' सकलबलनेता, 'प्रवीरपुरुषावृतः' प्रवीराः पुरुषाः तैरावृतः, सन् । 'प्रवीर-

पृतनावृतः' इति मुद्रितपुस्तकपाठे तु प्रकृष्टा वीरा यत्र सा तथा भूतया 'पृतनया' सेनया, आवृतः, सन्। 'पुरतः' अग्रतः, 'यायात्' गच्छेत्। 'मध्ये' स्कन्धावारस्य मध्ये, 'कलत्रं' अन्तःपुरादिकं, सकलपुत्रदारमिति यावत्, 'स्वामी' विजिगीषुः, 'कोषः' धनसमुदायः, 'यद्बलं', 'फल्गु' असारं, तच्च बलं, यायादिति पूर्व्वेणान्वयः। 'फल्गु च यद्बलं' इत्यत्र 'फल्गु महद्बलमिति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० ४५ स्लो०॥ ४५॥

पार्श्वयोरिति। सर्व्वत्र यायादिति अनुषञ्जनीयम्। स्लोकार्थः सुगमः॥ १९ स० ४६ स्लो०॥ ४६॥

पश्चादिति। 'ज्ञतो' निपुणः, 'सेनापतिः' ज्ञतलक्षणः पुरुषः, 'सर्व्वं' सकलसैन्यं, 'पुरस्कृत्य' अग्रेकृत्य, 'सम्बद्धसैन्यौघः' सम्यग्व्यूहीकृतसेनासमूहः, तथा 'खिन्नान्' प्राप्तखेदान्, 'शनैः' मन्दं यथा स्यात् तथा, 'आश्वासयन्' आश्वासं प्रापयन्, सन् 'स्वयं', 'पश्चात् यायात्'॥ १९ स० ४७ स्लो०॥ ४७॥

प्रयाणक्रममभिधातुमाह, यायादिति। 'पुरः' अग्रतः, 'भये' आक्रमणाशङ्कायां, सति, 'मकरेण' वक्ष्यमाणलक्षणेन, 'महता व्यूहेन', 'वा' अथवा, 'उद्धतपक्षेण' बलवत्पक्षानीकेन, 'श्येनेन' वक्ष्यमाणलक्षणेन व्यूहेन, तथा, 'धीरवक्त्रया' धीरा वक्त्रे सेनामुखे अग्रे इति यावत् यस्याः तथाभूतया, 'सूच्या' सूच्याकारवक्ष्यमाणलक्षणव्यूहेन, 'यायात्', इत्यर्थः। 'उद्धतपक्षेण' इत्यत्र 'उभयपक्षेण' इति, 'धीरवक्त्रया' इत्यत्र 'धीरचक्रया' इति च पाठद्वयं न समीचीनं॥ १९ स० ४८ स्लो०॥ ४८॥

पश्चाद्भये इति। 'पश्चाद् भये', सति, 'शकटं' शकटाख्यं वक्ष्यमाणलक्षणं व्यूहं 'प्रकल्पयेदि'त्यनेन सम्बन्धः एवं सर्व्वत्र। 'पार्श्वयोर्भये' सति, 'वज्रसंज्ञितं' वज्राख्यं वक्ष्यमाणलक्षणं व्यूहं, 'सर्व्वतः' समन्ताद्भये, 'सर्व्वतोभद्रं' वक्ष्यमाणलक्षणं व्यूहं। 'भये व्यूहमित्यत्र 'भयव्यूहमिति मुद्रितपुस्तकपाठो न समीचीनः॥ १९ स० ४९ स्लो०॥ ४९॥

कन्दरेति, 'कन्दराशैलगहननिम्नगावनसंकटे' 'कन्दरा' पर्व्वतदरी,

'शैलाः' पर्व्वताः, 'गहनानि' दुर्गमाणि, 'निम्नगाः' नद्यः, 'वनानि' वृक्षगुल्मादीनि, एतैः 'सङ्कटे' सङ्कीर्णे, 'दीर्घे' दूरे, 'अध्वनि' प्रयाणमार्गे, 'परिश्रान्तं' क्लान्तं, 'क्षुत्पिपासाहिमक्लमं' क्षुत्पिपासाहिमैः 'क्लमः' क्लान्तिः, यस्य तत्, । 'व्याधि-दुर्भिक्ष-मरकैः, पीड़ितं' 'व्याधयः' ज्वरादयः, 'दुर्भिक्षं' देशे भक्ष्याभावः, 'मरकं' मारीभयं, एतैः 'पीड़ितं' उपद्रुतं, 'दस्युविद्रुतं' 'दस्युभिः' 'विद्रुतं' उत्पीड़ितं, 'पङ्क-पांशु जलक्लिन्नं' 'पङ्काः' कर्दमाः, 'पांशवः' रजांसि, 'जलानि,' एतैः 'क्लिन्नं' समाकुलं, 'व्यस्तं' पृथकभूतं, 'पुञ्जीकृतं' सङ्कीर्णं, 'प्रसुप्तं' निद्रितं, 'भोजनव्यग्रं' भक्षणोत्कण्ठं, 'अभूमिष्ठं' युद्धानुपयोगिभूमिस्थितं, 'असंस्थितं' विशृङ्खलं, 'एवमादिषु,' 'व्यसनेषु' विपत्सु, 'जातेषु,' 'समाकुलं' व्याकुलं, 'स्वसैन्यं' निजबलं, 'साधु' सम्यक्, 'रक्षेत,' 'परसैन्यस्य' शत्रुबलस्य, 'घातयेत्' विनाशयेत् ॥ १८ स० ॥ ५०-५१-५२-५३ श्लो० ॥ ५०-५१-५२-५३ ॥

कूटयुद्धविकल्पानभिधातुमाह, विशिष्ट इति। 'विशिष्टो देशकालाभ्यां' उत्कृष्टदेशकालावस्थितः, 'भिन्नारिप्रकृतिः' 'भिन्नाः' विश्लेषिताः, 'अरेः' यातव्यस्य, 'प्रकृतयः' अमात्यादिराज्याङ्गानि, येन स तथाभूतः, 'बली' उत्कृष्टबलसम्पन्नः, विजिगीषुरितिशेषः। 'प्रकाशयुद्धं,' 'कुर्य्यात्,' 'विपर्य्यये' देशकालवैशिष्ट्याद्यभावे, 'कूटयुद्धं' अप्रकाशयुद्धं, 'कुर्य्यात्' ॥ १८ स० ॥ ५४ श्लो० ॥ ५४ ॥

तेष्विति। 'तेषु' अनन्तरोक्तेषु, 'अवस्कन्दकालेषु' बलव्यसनकालेषु, 'अभूमिष्ठं' अयोग्यभूमिस्थितं, 'समाकुलं' व्याकुलं, 'परं' शत्रुं, 'हन्यात्' कूटयुद्धेन विनाशयेत्। 'स्वभूमिष्ठं' योग्यभूमिस्थितं, 'परं', 'तद्भूमौ चोपजापतः' 'तस्य' यातव्यस्य, 'भूमौ' अनुकूलभूमौ, 'उपजापतः' प्रकृतिभेदतः, हन्यादिति पूर्व्वेण सम्बन्धः। 'अभूमिष्ठं स्वभूमिष्ठं तद्भूमौ चोपजापतः' इत्यत्र 'अभूमिष्ठं स भूमिष्ठः स्वभूमौ चोपजायते' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ १८ स० ॥ ५५ श्लो० ॥ ५५ ॥

प्रकृतीति। 'प्रकृतिप्रग्रहाहृतं' 'प्रकृतेः' राज्याङ्गस्य, 'प्रग्रहेण' आकृ-

मार्गेण, 'अदृष्टं' दुर्लभं। 'स्पशैः' गुप्तचरैः। 'स्पशैः' इत्यत्र 'स्पर्शैः' इति मुद्रितपुस्तकपाठो न समीचीनः अन्यत् प्रतीतं॥ १९ स० ॥ ५६ श्लो० ॥ ५६॥

पुरस्तादिति। 'पुरस्तात्' अग्रतः, योद्धुं 'दर्शनं,' 'दत्त्वा' स्वल्पैर्दत्त्वा, 'तल्लब्धकृतनिश्चयं' येन विजिगीषुबलेन दर्शनं दत्तं तल्लब्धकृतो निश्चयो येन यातव्येन तं। 'प्रवीरेण' प्रकृष्टवीरान्वितेन, 'वेगिना' वेगवता, 'बलेन' सैन्येन, 'पश्चात्' पृष्ठतः, 'उत्पात्य' आक्रम्य, 'हन्यात्' विनाशयेत्। 'पुरस्तात्' इत्यत्र 'पुरस्तु' इति मुद्रितपुस्तकपाठः। 'तल्लब्धकृतनिश्चयं' इत्यत्र तल्लब्धकृतनिश्चयात्' इति,'उत्पात्य' इत्यत्र 'उत्पद्य' इति च मुद्रितपुस्तकपाठो न समीचीनः। 'प्रवीरेण' इत्यत्र 'सवीरेण' इति मुद्रितपुस्तकपाठः॥ १९ स० ॥ ५७ श्लो० ॥ ५७ ॥

पश्चाद्देति। 'वा' अथवा, 'पश्चात्' पृष्ठतः, 'संकुलीकृत्य' समाकुलं कृत्वा, अरिसैन्यमिति शेषः। 'पूर्व्वतः' अग्रतः, 'सारेण' बलेन, 'हन्यात्' विनाशयेत्। 'आभ्यां प्रागुक्तपश्चाद्यताभ्यां, 'कूटयोधने,' 'पार्श्वाभिघातौ,' 'व्याख्यातौ' कथितौ॥ १९ स० ॥ ५८ श्लो० ॥ ५८ ॥

पुरस्तादिति। 'पुरस्तात्' अग्रतः, 'विषमे' दुर्गमे, 'देशे,' 'वेगवान् विजिगीषुः,' 'पश्चाद् हन्यात्'। 'पश्चाद् विषमे,' 'पुरः' अग्रतः, हन्यात्, 'एवमेव तु पार्श्वयोः' वामतो विषमे, दक्षिणतो हन्यात्। दक्षिणतो विषमे, वामतो हन्यादित्यर्थः। मुद्रितपुस्तके श्लोकस्यास्य शेषार्द्धस्थाने श्लोकान्तरस्य शेषार्द्धं मुद्रितं। शेषार्द्धन्तु "पुरःपश्चाच्च विषमे एवमेव तु पार्श्वयोः" इति॥ १९ स० ॥ ५९ श्लो० ॥ ५९ ॥

"प्रथमं योधयित्वा वा दूष्यमैत्राटवीबलैः। श्रान्तं सन्तं निराक्रन्दं हन्याद-श्रान्तवाहनः" इति। 'प्रथमं' पूर्व्वमेव, 'दूष्यमैत्राटवीबलैः', 'योधयित्वा' युद्धं कारयित्वा, 'श्रान्तं' प्राप्तश्रमं, 'सन्तं' भवन्तं, 'निराक्रन्दं' मित्रबल-रहितं शत्रुमिति शेषः। 'अश्रान्तवाहनः', सन्, 'हन्यात्'। श्लोकोऽयं मुद्रितपुस्तके पतितः॥ १९ स० ॥ ६० श्लो० ॥ ६० ॥

"दूष्यमित्रबलैर्वापि भङ्गं दत्त्वा प्रयत्नवान्, जितमेवेति विश्वस्तं हन्याच्छत्रुं

व्यापाश्रयः" इति। 'दृष्टामित्रबलैः',कारणभूतैः,'भङ्गं दत्त्वा,' 'प्रयत्नव
विजिगीषुरितिशेषः। 'जितमेवेति विश्वस्तं शत्रुं,' 'व्यपाश्रयः' वन
च्छन्नः, सन्, 'हन्यात्'। अयमपि श्लोकः मुद्रितपुस्तके पतितः॥ १९ स
६१ श्लो०॥ ६१॥

स्कन्धावारेति। 'अप्रमत्तः' सावधानो विजिगीषुः, 'स्कन्धावार-पुर-ग्रा
सस्यसार्थव्रजादिषु', 'विक्षोभ्य' क्षोभं प्रापय्य, 'परानीकं' शत्रुसैन्यं, 'वि
शयेत्'। 'स्कन्दावार-पुर-ग्राम-सस्यसार्थ-व्रजादिषु' इत्यत्र 'स्कन्धाव
पुर-ग्राममास्यमामं व्रजादिषु' इति मुद्रितपुस्तकपाठो न सम्यक्। १९ स
६२ श्लो०॥ ६२॥

फल्गुसैन्येति। 'सारवद्बलं', सारयुक्तं स्वसैन्यं, 'फल्गुसैन्यप्रतिच्छन्नं' असा
सैन्यवेष्टितं, 'कृत्वा', 'तद्विलोपे' फल्गुबलविनाशे, 'समासक्तं' व्याप
अरिसैन्यमिति शेषः। 'सिंहवत्', 'उत्पत्य' आक्रम्य, 'ग्रसेत्' विनाशयेत्
विजिगीषुरिति शेषः। 'समासक्तं' इत्यत्र 'महयन्तं' इति मुद्रितपुस्तक
पाठः। १९ स०॥ ६३ श्लो०॥ ६३॥

मृगयेति। विजिगीषुः 'व्यपाश्रयः' वनादिसंलीनः, सन्, 'मृगयासंप्रयुक्त
मृगयाव्यापारासक्तं, अथ वा 'गोग्रहाकृष्या', 'आप्रबन्धमात्', 'तक्त
गोगणासक्तदृष्टिं, 'शत्रुं हन्यात्'। १९ स०॥ ६४ श्लो०॥ ६४॥

अवस्कन्देति। 'अवस्कन्दभयात्' आक्रमणभयात्, 'रात्रौ', '[illegible]
कृतश्रमं' जागरणेन क्लान्तं, अतएव 'दिवासुप्तं','निद्राव्याकुलं' निद्राविक्लवं
च 'सैनिकं', 'हन्यात्'। अस्य श्लोकस्य शेषार्द्धं मुद्रितपुस्तके पतितं
शेषार्द्धन्तु "दिवा प्रसुप्तं वा हन्यात् निद्राव्याकुलसैनिकं" इति। १९ स०॥
६५ श्लो०॥ ६५॥

पूर्व्वाह्ण इति। 'सौप्तिकविधानवित्' वक्ष्यमाणलक्षणसौप्तिकविधानज्ञः,
अन्यत् प्रतीतं। 'पूर्व्वाह्ण आहतं श्रान्तं' इत्यत्र 'अहस्सन्नाहतश्रान्तं' इति
मुद्रितपुस्तकपाठो न साधुः। १९ स०॥ ६६ श्लो०॥ ६६॥

सपादेति। 'सपादकोषावरणाः' पादानां चर्म्ममयाः 'कोषाः', 'आवरणानि'

सन्नाहाः, तद्युक्तैः 'नागैः' गजैः, 'अतिजवोपेतैः' अत्यन्तवेगिभिः, 'अश्वैः', 'वा' अथवा, 'खड्गपाणिभिः', 'नरैः', 'सौप्तिकं' सुप्तबलविनाशं, 'कुर्य्यात्'। 'नागैः' इत्यत्र 'भागैः' इति मुद्रितपुस्तकपाठस्त्वसंगतः। 'अश्वैरति-जवोपेतैः' इत्यत्र 'कोपादुग्रजवोपेतैः' इति मुद्रितपुस्तकपाठः न समीचीनः॥ १९ स०॥ ६७ श्लो०॥ ६७॥

प्रतिसूर्य्येति। 'प्रतिसूर्य्य-महावातं' प्रतिकूलौ सूर्य्य-महावातौ यस्य तथा-भूतं, अतएव 'सम्मीलितेक्षणं' मुद्रितनेत्रं, 'शत्रुं', 'लघु' शीघ्रं, 'उत्थितः', सन् विजिगीषुः 'इत्येवं कूटयुद्धेन हन्यात्'। 'प्रतिसूर्य्यमहावातं' इत्यत्र 'प्रतिसूर्य्यं महावातं' इति मुद्रितपुस्तकपाठो न सम्यक्। १९ स०॥ ६८ श्लो०॥ ६८॥

नीहारेति। यतः, 'नीहारः', धूमिका, 'तिमिरं' अन्धकारः, 'गावः' गोसमूहः, 'श्वभ्रं' विवरं, 'अद्रिः' पर्व्वतः, 'निम्नगाः' नद्यः, एताः, 'शत्रुं', 'अवन्ति' रक्षन्ति, अतः 'इत्यादि' नीहारादिकं, 'सत्त्वं' 'सन्तं' विद्यमानं, छायते छादयति यत् एवम्भूतं, 'सद्म' आश्रयस्थानं, 'प्रकीर्त्तितं' कथितं, बुधैरिति शेषः। 'अवन्ति शत्रुमित्यादि सत्त्वं सद्म प्रकीर्त्तितं' इत्यत्र 'वदन्ति शत्रुमित्यादि क्षत्रं सद्म प्रकीर्त्तितं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स०॥ ६९ श्लो०॥ ६९॥

उपसंहरन्नाह, साध्वेति। 'अप्रमत्तः' अवहितः, 'व्यवसायवर्त्ती' व्यवसाये स्थितः, विजिगीषुः, 'साधु' यथा भवति तथा, 'येन प्रकारेण' कूटयुद्धा-दिना, 'परं' शत्रुं, 'निहन्यात्' विनाशयेत्। 'अप्रमत्तः', विजिगीषुः 'चरैः' प्रणिधिभिः, 'समावेदिततत्प्रचारः' सम्यक्विज्ञापितशत्रुप्रचारः, सन्, 'तेनैव' तेन प्रकारेणैव, कूटयुद्धादिनेति यावत्, 'ततः' यातव्यात्, 'शङ्केत' शङ्कां कुर्व्वीत। 'साध्वप्रमत्तः' इत्यत्र 'साधु प्रवृत्तः' इति मुद्रित-पुस्तकपाठः, 'येन प्रकारेण' इत्यत्र 'यामप्रकारेण' इति मुद्रितपुस्तक-पाठश्च न समीचीनः। १९ स०॥ ७० श्लो०॥ ७०॥

कूटयुद्धैः शत्रुबधे पापमाशङ्क्याह, नियतेति। विजिगीषुः 'नियतं'

निश्चयेन, 'कूटयुद्धेन', 'शत्रून्', 'उपनिहन्यात्' उपेत्य विनाशयेत्। 'हि' यतः, 'छद्मना' छलेन, 'शत्रुनाशः', 'धर्म्मं', 'न', 'तिरयति' आच्छादयति, विनाशयतीति यावत्। तदेव दृष्टान्तेन द्रढयति 'अचकितेति, 'सुनिशित-शस्त्रः' सुतीक्ष्णायुधः, 'द्रोणसूनुः' अश्वत्थामा, 'इव' यथा, 'अचकितं', 'निशि', 'सुप्तं' निद्रितं, 'पाण्डवानां', 'अनीकं' सैन्यं, 'जघान' विनाशितवान्। 'नियतमुपनिहन्यात् कूटयुद्धेन' इत्यत्र 'नियतमिति निहन्यात् कूटयुद्धेषु' इति, 'तिरयति धर्म्मं छद्मना' इत्यत्र 'निरयति धर्म्मंच्छद्मना' इति च मुद्रितपुस्तकपाठो न समीचीनः॥ १९ स०। ७१ श्लो०। ७१॥

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानुसारिण्यां ऊनविंशः सर्गः॥

मुद्रितपुस्तकानुसारेण अष्टादशः सर्गः॥

---

## अथ विंशः सर्गः।

मुद्रितपुस्तकानुसारेण ऊनविंशः सर्गः।

कूटयुद्धमभिधायाथ प्रकाशयुद्धं सम्पादयितुं बलाङ्गानां कर्म्माणि, तत्र हस्तिकर्म्म श्लोकत्रयेण दर्शयति, प्रयाण इति। 'प्रयाणे' युद्धयात्रायां, 'पूर्व्वयायित्वं', 'वनदुर्गप्रवेशनं', परेषां त्रासजननार्थमिति शेषः। 'अक्षतानां' अक्षतपूर्व्वाणां, 'मार्गाणां' पथां, 'तीर्थानां' जलावतरणिकानां, च 'प्रवर्त्तनम्', महाकायत्वादिति भावः। 'क्षतानाञ्च प्रवर्त्तनं' इति पाठान्तरं॥ २० स०॥ १ श्लो०॥ १॥

तोयेति। 'तोयावतार-सन्तारौ', 'तथा', 'एकाङ्गविजयः' एकेनैव हस्त्यङ्गेन परसैन्यविजयः, 'अभिन्नानां' मिलितानां, 'अनीकानां' परसैन्यानां, 'भेदनं' पृथक्करणं, हस्तिसमूहप्रेरणादिति भावः। 'भिन्नानां' विच्छिन्नानां, स्वसैन्यानां, 'सङ्ग्रहः' एकीकरणं॥ २० स०॥ २ श्लो०॥ २॥

विभीषिकेति। 'विभीषिका' शत्रुषु भयप्रदर्शनं, 'विघातः' शत्रूणां व्याघातकरणं, 'पुरप्राकारभञ्जनं' 'पुरस्य' नगरस्य, 'प्राकारभञ्जनं' प्राचीरभङ्गः, 'प्राकारद्वारभञ्जनं' इति मुद्रितपुस्तकपाठः। 'कोषनीतिः' कोषानयनं, 'भयत्राणं' भयात् रक्षणं, एतानि 'हस्तिकर्म्म', 'प्रचक्षते' वदन्ति, पूर्व्वाचार्य्या इति शेषः। 'कोषनीतिर्भयत्राणं' इत्यत्र 'कोषनीतिभयत्राणमिति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स०॥ ३ श्लो०॥ ३॥

रथकर्म्माभिधातुमाह, तुरङ्गस्येति। तुरङ्गस्य सैन्यस्य निषेधो रक्षणं, 'भेदस्य' भिन्नस्य, 'सन्धानं', 'रथकर्म्म', 'चतुरङ्गस्य' परानीकस्य, 'निषेधः' प्रतिषेधः, 'बलरक्षणं' स्वकीयबलरक्षणं, 'अभिन्नसन्धानं', हस्तिकर्म्मवत् ग्रहणं इति रथकर्म्मैव तत्। हस्तिकर्म्माभिधायकश्लोकानन्तरं रथकर्म्माभिधायकश्लोकः मुद्रितपुस्तके हस्तलिखितपुस्तकेषु च पतितः, परन्तु हस्तलिखितपुस्तकेषु हस्तिकर्म्माभिधायकश्लोकव्याख्यानानन्तरं रथकर्म्मा-

भिधायकश्लोकस्य व्याख्यानं वर्त्तते तच्च व्याख्यानं अस्माभिर्यथा दृष्टमुद्धृतं, मूलादर्शनात् अपरिशोधितमेव ॥ २० स० ४ श्लो० ॥ ४ ॥

वनेति। वनानां दिशां मार्गाणां 'विधयः' निरूपणं, अश्वकर्म्मेति सम्बन्धः, 'वीवधासाररक्षणं' 'वीवधः' तण्डुलादिसंग्रहः, 'आसारः' सैन्यानां सर्व्वतो-व्याप्तिः, तयोः रक्षणं, 'अनुयानापसरणे' परसैन्यस्य त्रासोत्पादनार्थं 'अनु' पश्चात्, 'यानं' गमनं, भङ्गदर्शनेन परबलान्याकृष्य इन्तुरपसरणं, 'शीघ्रं कार्य्योपपादनं' शीघ्रं सम्पादनीयानां कार्य्याणामुपपादनं, 'दीनानुसरणं' 'दीनानां' अनुकम्पनीयानां स्वबलानां, भयापसरणार्थं पश्चाद्गमनं अनुसरणं'। 'कोटीनां' उभयपक्षस्थितबलानां, 'जघनस्य' अवनिपृष्ठभागस्थितबलस्य, च अनुसरणानीति शेषः, 'इत्यश्वकर्म्म'। ~~.................. च 'सर्व्वदा~~ ~~.....~~ शस्त्रधारणं', पदातिकर्म्मेति शेषः। 'वनदिङ्मार्गप्रचयः' इति मुद्रितपुस्तक-पाठः ॥ २० स० ५-६ श्लो० ॥ ५-६ ॥

शोधनमिति। 'कूपतीर्थानां' कूपजलावतरणिकानां, 'शोधनं' खनन-क्रिया, 'शिबिरस्य' कन्धावारस्थानस्य, 'मार्गाणां', 'यवसादिषु' पलालादिषु, आदिग्रहणात् लोष्टकण्टकशाखादिषु च यत् किञ्चित् कर्म्म तत् 'विश्वकर्म्म' विश्वेषां सकलबलानां, 'कर्म्म', 'विज्ञेयं', 'यवसादि च यत्किञ्चित्' इत्यत्र 'यवसादिषु यत्किञ्चित्' इति टीकोद्धृतपाठः। 'विश्वकर्म्म तत्' इत्यत्र 'विश्वकर्म्मवत्' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० ७ श्लो० ॥ ७ ॥

बललक्षणान्यभिधातुमाह, जातिरिति। 'जातिः' विशुद्धजातिमत्त्वं, 'सत्त्वं' उत्तमत्वं, 'वयः' तरुणत्वं, 'स्थानं' उत्पत्तिस्थानस्य उत्तमत्वं, 'प्राणिता' बलवत्त्वं, 'मर्म' जीवनस्थान-सन्धिस्थानादीनां विशुद्धत्वं, 'वेगिता' वेगवत्त्वं, 'तेजः' तेजस्त्वं, 'शिल्पं' स्वे स्वे विषये ज्ञातविद्यत्वं, 'उदग्रत्वं' उन्नतत्वं, 'स्थैर्य्यं' स्थितेरचलत्वं, 'धैर्य्यं' इति पाठान्तरं। 'साधु विधेयिता' साधु यथा भवति तथा यथोक्तकारिता, 'इति' एतत्, 'सद्व्यञ्जनाचारवता' बलीयवद्व्याचारयुक्तानां, 'पत्त्यश्व-रथ-दन्तिनां', 'लक्ष्म' असाधारणचिह्नं, 'इतेन' उक्तलक्षणेन, 'युक्तान्' विशिष्टान्, पत्त्यश्व-रथ-दन्तिनो इति

शेषः। 'कर्म्मसु' युद्धकर्म्मसु, 'योजयेत्' प्रेरयेत्। 'जातिः सत्त्वं' इत्यत्र 'जातिस्थानं' इति, 'प्राणिता' इत्यत्र 'प्राणिनां' इति, 'उदग्रत्वं' इत्यत्र 'शीघ्रगत्वं' इति, पत्त्यश्व-रथ-दन्तिनां' इत्यत्र 'पत्त्यश्व-रथ-वाजिनां' इति च मुद्रितपुस्तकपाठा न समीचीनाः॥ २० स० ८-९ श्लो०॥ ८-९॥

पदातीनां युद्धानुकूलां भूमिमभिधातुमाह, सस्थूणेति। 'सापसारा' अपसरणप्रदेशसहिता, 'नातिविषमा' नातिबन्धुरा, या भूमिः सा पदातीनां युद्धानुकूला इति शेषः। अन्यत् स्पष्टं॥ २० स० १० श्लो०॥१०॥

अश्वानां युद्धानुकूलां भूमिमभिधातुमाह, अल्पेति। 'अल्पवृक्षोपला' अल्पा वृक्षाः उपलाश्च यस्यां सा तथाभूता। 'अच्छिद्रा' गर्त्तरहिता, 'निःशर्करा' क्षुद्रपाषाणरहिता, 'निष्पङ्का', 'सापसारा', एवम्भूता या भूमिः सा 'वाजिभूः' अश्वानां युद्धानुकूला भूमिरित्यर्थः॥ २० स० ११ श्लो०॥११॥

रथयुद्धानुकूलां भूमिमभिधातुमाह, निःस्थाणिवति। श्लोकद्वयं प्रतीतं। मुद्रितपुस्तके त्रयोदशसंख्यकः श्लोकः असङ्गतत्वात् हस्तलिखितपुस्तकेऽविद्यमानत्वाच्च न व्याख्यातः॥ २० स० १२-१३ श्लो०॥ १२-१३॥

गजानुकूलां भूमिमभिधातुमाह, मर्द्दनीयेति। श्लोकार्थः सुगमः॥ २० स० १४ श्लो०॥ १४॥

युद्धे राजस्थानमभिधातुमाह, जयेति। 'अप्रतिग्रहः' अनाक्रमणीयः, 'मतिमान्' नीतिशास्त्रनिपुणः, 'जयार्थी' विजिगीषुः, 'नैव युध्येत' स्वयं युद्धं न कुर्व्वीत। 'वा' यदि, 'आवश्यकत्वात्', 'युध्येत', 'तदा', 'अतिबलवेष्टितः', सन् युध्येत इत्यर्थः। हस्तलिखितपुस्तके तु श्लोकोऽयं भिन्नक्रमेण लिखितः स च क्रमः, "जयार्थी नृपतिस्तिष्ठेत् दूरं गत्वाप्रतिग्रहे। भिन्नञ्च प्रतिगृह्णीयात् न हि युध्येत तं विना" इति। व्याख्यानन्तु 'जयार्थी' विजिगीषुः राजा, 'दूरं' युद्धस्थानात् इति शेषः, 'गत्वा तिष्ठेत्', अप्रतिग्रहे स्थाने स्थितः 'भिन्नं' परैरपहृतं प्रतिग्रहविकलमिति यावत्, स्वसैन्यमिति शेषः 'प्रतिगृह्णीयात्' रक्षेदित्यर्थः, 'हि' यतः, 'तं' राजानं, 'विना न युध्येत', सैन्यमिति शेषः॥ २० स० १५ श्लो०॥ १५॥

कोषस्थानमभिधातुमाह, गजेष्वेति । कोषः गजेषु आरोपितः कार्य्यः तथा च सुरक्षो भवतीति । 'शीघ्रयानैः' तुरङ्गोष्ट्रादिभिः यानैः, 'अधिष्ठितः' सन्निधापितः, रक्षासौकार्य्यार्थमेवेति भावः । 'यत्र', 'राजा' विजिगीषुः 'तत्र', 'कोषः', 'हि' यस्मात्, 'राजता', 'कोषाधीना', यस्य कोषः स एव राजा भवतीत्यर्थः ॥ २० स० १६ श्लो० ॥ १६ ॥

कोषप्रयोजनमभिधातुमाह, प्रत्यग्र इति । 'प्रत्यग्रे' अभिनवे, '...' 'हि' ...नृपवधादौ, 'कृते' निर्वर्त्तिते सति, 'श्लाघमानः' वर्णयन्, 'कृतादरः' कृत-सम्मानः, 'योधेभ्यः', 'अतः' तस्मात्, 'दद्यात्' सकोषं प्रयच्छेत्, 'हि' यस्मात्, 'कः' कोनाम पुरुषः, 'दातुः' दानशीलस्य विजिगीषोः, 'न युध्येत', अपि तु सर्व्व एव युध्येत ॥ २० स० १७ श्लो० ॥ १७ ॥

दानसंख्यामभिधातुमाह, दद्यादिति । विजिगीषुः 'प्रहृष्टः' आह्लादितः, सन्, 'राजघातिने' शत्रुबलेषु यो राजा तद्घातिने, 'वर्णानां' आहित-द्रवियाविशेषाणां, 'नियुतं' लक्षं, 'दद्यात्', । 'तत्सुतवधे' तस्य राज्ञः सुतवधे, 'तथा सेनापतिवधे', 'तदर्द्धं' नियुतार्द्धं, पञ्चाशत्सहस्राणीत्यर्थः । दद्यादिति पूर्व्वेणानान्वयः एवमुत्तरत्रापि ॥ २० स० १८ श्लो० ॥ १८ ॥

प्रवीराणामिति । 'प्रवीराणां' प्रकृष्टवीराणां, यः 'मुख्यः' प्रधानः, तस्य 'वधे' 'शतगुणं शतं' दशसहस्रं, 'कुञ्जरवधे' हस्तिवधे, 'तदर्द्धं' शतगुण-शतार्द्धं, पञ्चसहस्रमिति यावत् । 'प्रधानस्यन्दनस्य' प्रधानरथस्य, 'वधे' विनाशे, च तदर्द्धमिति सम्बन्धः । 'प्रधानस्यन्दनस्य च', इत्यत्र 'प्रधानं स्यन्दनस्य च', इति मुद्रितपुस्तकपाठो न सम्यक् ॥ २० स० १९ श्लो० ॥ १९ ॥

सहस्रमेति । 'वाजिवधे' अश्विवधे, 'सहस्रं' दशशतं, 'पत्तिमुख्य-वधे' पदातिप्रधानविनाशे, 'गवां विंशतिकं', 'सर्व्वं' समस्तं सैन्यं, 'भोग-द्वैगुण्यं' 'भोगः' उपजीविका, तस्य द्वैगुण्यं यत्र तत् तथाभूतं कुर्य्यादिति शेषः । 'पत्तिमुख्यवधे' इत्यत्र 'पतिमुख्यवधे' इति मुद्रितपुस्तकपाठो न सम्यक् ॥ २० स० २० श्लो० ॥ २० ॥

रूप्यमिति । 'रूप्यं' रजतं, 'हेम' सुवर्णं, 'कुप्यं' स्वर्णरौप्यभिन्नधातुः, 'क',

'यत् अर्थति', 'तस्य तत्'। 'वा' अथवा, 'हृष्टः' श्लाघादितः, 'नराधिपः' राजा, 'योधान्', 'बलानुरूपं' कार्य्यानुरूपं, 'दद्यात्'। 'बलानुरूपं वा' इत्यत्र 'बलानुरूपं हि' इति मुद्रितपुस्तकपाठः, 'योधान् नराधिपः' इत्यत्र 'योधान् प्रहर्षयन्' इति पाठान्तरं, 'रूप्यं' इत्यत्र 'गुप्यं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० २१ श्लो० ॥ २१ ॥

व्यूहरचनायां बलानां अवस्थानभूमिमभिधातुमाह, पञ्चेति। 'अरत्निः' विस्तृतकनिष्ठः बद्धमुष्टिहस्तः, तैः पञ्चभिः कल्पितं देशमानं 'धनुः', 'तस्मिन्' धनुषि, पञ्चारत्निप्रमाणभूभाग इति यावत्। 'धन्विनं' धनुर्धरं, 'युधि' संग्रामे, 'स्थापयेत्'। 'त्रिगुणे' धनुस्त्रयपरिमितस्थाने, पञ्चदशारत्नि-भूभागे इति यावत्। 'अश्वः', योज्यः' इति शेषः। 'पञ्चसु पञ्चसु' पञ्च-गुणितेषु पञ्चधनुःषु, पञ्चविंशत्यरत्निप्रमाणभूभागेष्विति यावत्। 'रथ-गजौ', 'योज्यौ' स्थापनीयौ। 'पञ्चारत्निर्धनुस्तस्मिन् स्थापयेद् धन्विनं' इत्यत्र 'पश्चात्तद्विधमुत्सर्पन् स्थापयेद्बलिनं' इति मुद्रितपुस्तकपाठो न सम्यक्। 'त्रिगुणेऽश्वः' इत्यत्र 'त्रिगुणाश्वा' इति मुद्रितपुस्तकपाठोऽपि न सम्यक्॥ २० स० २२ श्लो० ॥ २२ ॥

व्यूहरचनायां बलानां असङ्कुलार्थं परस्परान्तरमभिधातुमाह, समेति। 'समः' चतुर्दशाङ्गुलप्रमाणं, सः 'अन्तरं' अन्तरालं, यस्य स तथाभूतः, 'पुरुषः' पदातिपुरुषः, एकपदातिपुरुषात् अपरपदातिपुरुषस्यान्तरं चतुर्द-शाङ्गुलप्रमाणमितिभावः। 'तुरङ्गः' अश्वः, 'त्रिसमान्तरः' द्विचत्वारिंशद-ङ्गुलप्रमाणान्तरः, एकतुरङ्गात् अपरतुरङ्गः उक्तप्रमाणान्तरः इति भावः। 'कुञ्जरः' हस्ती, 'स्यन्दनः' रथश्च, 'पञ्चसमान्तरः' सप्तत्यङ्गुलप्रमाणान्तरः, एककुञ्जरात् अपरकुञ्जरः एकस्यन्दनात् अपरस्यन्दनश्च उक्तप्रमाणान्तर इति भावः॥ २० स० २३ श्लो० ॥ २३ ॥

तथेति। 'व्यायामे' युद्धार्थप्रसरणे, तथा 'विनिवर्त्तने' विश्रामार्थापसरणे, 'यथा' येनप्रकारेण, 'असंबाधो भवेत्' सङ्कीर्णता न भवेत्, 'तथा' तेन प्रकारेण, 'पत्त्यश्व-रथ-दन्तिनः', 'युद्धेरन्'। विस्तीर्णायां रणभूमौ पूर्व्वोक्त-

प्रमाणादधिकमप्यन्तरालं कार्य्यमितिभावः । 'व्यायामे' इत्यत्र 'व्यायामः' इति मुद्रितपुस्तकपाठो न साधुः ॥ २० स० २४ श्लो० ॥ २४ ॥

असङ्करेणेति । 'असङ्करेण' भिन्नजातीयामिश्रणेन, 'युद्धेरन्', यतः 'सङ्करः' भिन्नजातीयमिश्रणं, 'सङ्कुलावहः' सङ्कीर्णताप्रापकः । 'तु' पुनः, 'महासङ्कुलयुद्धे', 'महागजान्', 'संश्रयेरन्', आकुलत्वापनोदनार्थमितिभावः । "असङ्करेण' इत्यत्र 'सङ्करेण च' इति 'महागजान्' इत्यत्र 'महाकुलान्' इति च मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० २५ श्लो० ॥ २५ ॥

बलविशेषस्य प्रतियोद्धृनभिधातुमाह, अश्वस्येति । 'अश्वस्य' अश्वारोहिणः पुरुषस्य, 'त्रयः' त्रिसंख्यकाः, 'पुरुषाः' पदातयः, 'प्रतियोद्धारो भवेयुः', 'कुञ्जरस्य' हस्त्यारोहिणः पुरुषस्य, 'पञ्चाश्वाः' पञ्चसंख्यका अश्वारोहिणः पुरुषाः, प्रतियोद्धारो भवेयुरिति पूर्व्वेणान्वयः । 'इतिकल्प्याः' एवं प्रणाल्यः, 'विधेयाः' विधातव्याः । 'अश्वस्य' इत्यत्र 'अवश्यं' इति मुद्रितपुस्तकपाठो न सम्यक् ॥ २० स० २६ श्लो० ॥ २६ ॥

कुञ्जरस्य प्रतियोद्धन्तरमभिधातुमाह, पादचारा इति । 'दशपञ्च च पादचाराः पुरुषाः' पञ्चदशसंख्यकाः पदातिपुरुषाः, कुञ्जरस्य प्रतियोद्धारो भवेयुरितिशेषः । 'नागस्य' हस्तिनः, 'कथितं' उक्तं, 'इति' एवं, 'विधानं', 'स्यन्दनस्य' रथस्य, विज्ञेयमितिशेषः । 'पादचारा भवेयुश्च' इत्यत्र 'पादशो भावयेदश्व' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० २७ श्लो० ॥ २७ ॥

अनीकानां परस्परान्तरमभिधातुमाह, अनीकेति । 'अनीकं' व्यूहाङ्गं, 'इति' उक्तक्रमेण, अश्वपदातियुक्ताः 'नवद्विपाः', अनीकमपि 'कल्प्याः' कल्पनीयाः, तथाच 'तस्यानीकस्य', 'रन्ध्रं' अन्तरालं, 'पञ्चचापं' पञ्चविंशत्यरत्निप्रमाणं, भवतीतिशेषः । अस्य श्लोकस्य पूर्व्वार्द्धं मुद्रितपुस्तके नास्ति, पूर्व्वार्द्धन्तु "अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः" । 'तस्यानीकस्य' इत्यत्र 'तथानीकस्य' इति मुद्रितपुस्तकपाठः । यत् शेषार्द्धमुक्तं तत् हस्तलिखितपुस्तके अवर्त्तमानं अतीवासङ्गतञ्च ॥ २० स० २८ श्लो० ॥ २८ ॥

इत्यनीकेति । 'इत्यनीकविभागेन' नवद्विपपरिकल्पितेन, 'व्यूहसम्पदः'

वजर्ज्जी', 'स्थापयेत्'। 'उरस्यकक्षपक्षान्' 'उरस्याः' 'उरसि' व्यूहस्य मध्ये, रचितसैन्यानि, 'कक्षाः' कक्षस्थितसैन्यानि, 'पक्षाः' पक्षस्थितसैन्यानि, 'एतान्', 'तुल्यान्' समद्विपसंस्थान्, 'प्रचक्षते'। अयं श्लोको मुद्रित-पुस्तके नास्ति। श्लोकस्तु "इत्यनीकविभागेन स्थापयेद् व्यूहसम्पदः। उरस्यकक्षपक्षांश्च तुल्यानेतान् प्रचक्षते" इति॥ २० स० २९ श्लो०॥ २९॥

व्यूहस्य अङ्गान्यभिधातुमाह, उर इति। 'उरः' व्यूहमध्यस्थमनीकं, 'कक्षौ' उरस्यस्य सन्निहितपार्श्वद्वयस्थमनीकं, 'पक्षौ' कक्षाधःपार्श्वद्वयस्थम-नीकं, 'मध्यं' पक्षयोर्बहिःस्थितमनीकं, 'पृष्ठं' मध्यस्य पृष्ठतोऽवस्थितमनीकं, 'प्रतिग्रहः' पृष्ठाख्यादनीकात् द्वितीयधनुर्व्यवहितमनीकं, 'कोटिः' एकपक्ष-स्थितमनीकं, 'व्यूहशास्त्रज्ञैः' व्यूहशास्त्रनिपुणैः, 'सप्ताङ्गः' उरःप्रभृति-सप्तविधाङ्गसम्पन्नः, 'व्यूहः', 'इष्यते'॥ २० स० ३० श्लो०॥ ३०॥

आचार्य्यमतमभिधातुमाह, उरस्येति। 'उरस्यकक्षपक्षैस्तु' उरःस्थित-कक्षस्थित-पक्षस्थितानीकैः, 'प्रतिग्रहैश्च' प्रतिग्रहस्थितानीकैश्च, 'अयं व्यूहः', 'गुरोः' बृहस्पतेः। 'पक्षाभ्यां परिवर्जितः' पक्षस्थितानीकविरहितः, 'एषः' व्यूहः, 'शुक्रस्य' शुक्राचार्य्यस्य, अभिमतः इति शेषः।' 'कक्षाभ्यां परिवर्जितः' इति मुद्रितपुस्तकपाठः॥ 'उरस्यकक्षपक्षैस्तु व्यूहोऽयञ्च प्रतिग्रहैः' इत्यत्र 'उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः' इति मुद्रितपुस्तकपाठः॥ २० स० ३१ श्लो०॥ ३१॥

सेनाङ्गपतिलक्षणमभिधातुमाह, अभेद्या इति। 'अभेद्याः' भेदेनावध्याः, 'कुलजाः' सद्वंशोत्पन्नाः, 'मौलाः' मूलपुरुषसम्बन्धादागताः, 'लब्धलक्ष्याः' लब्धो लक्ष्यो यैः ते तथाभूताः, 'प्रहारिणः' प्रहरणशीलाः, 'दृष्टयुद्धप्रति-क्रियाः' दृष्टा 'युद्धप्रतिक्रिया' युद्धप्रतीकारः, यैः ते तथाभूताः, एवंभूता जनाः 'सेनाङ्गपतयः' 'सेनाङ्गानां' हस्त्यश्व-रथ-पदातिरूपचतुरङ्गबलानां, 'पतयः' अधिष्ठातारः, 'कार्य्याः'। 'मौलाः' इत्यत्र 'मेध्याः' इति मुद्रित-पुस्तकपाठः॥ २० स० ३२ श्लो०॥ ३२॥

सेनाङ्गपतिविधेयमभिधातुमाह, प्रवीरेति। श्लोकार्थः प्रतीतः॥ २० स० ३३ श्लो०॥ ३३॥

पश्चिमेति। 'फल्गु' असारं, 'यत्किञ्चित् सैन्यं', 'तत्', 'व्यूहस्य' समाङ्ग-व्यूहस्य, 'मध्ये भवेत्'। 'यत्किञ्चित्', 'युद्धवस्तु' युद्धोपकरणादिकं, 'तत्' 'जघने' व्यूहस्य जघनप्रदेशे, 'भवेत्'। 'फल्गुसैन्यञ्च' इत्यत्र 'फल्गुसैन्यस्य' इति मुद्रितपुस्तकपाठो न सम्यक् ॥ २० स० १४ श्लो० ॥ १४ ॥

प्रतिग्रहानीकस्यैव विशेषमभिधातुमाह, युद्धार्थमिति। 'युद्धकुशलः' युद्धशास्त्रनिपुणः, विजिगीषुरितिशेषः। ' ' संग्रामार्थं, 'मुण्डानीकं, छत्रचामरादिराजचिह्नरहितं सैन्यं, 'नियोजयेत्',। स्वयन्तु युद्धस्थले न यायादितिभावः। तेनैव राजा रक्षितो भवति। 'हि' यतः, 'युद्धं' 'नायक-प्राणं' विजिगीषुप्राणं। 'तत्' युद्धं, 'अनायकं' विजिगीषुरहितं, सत् 'हन्यते' विफलं भवति। 'युद्धकुशलः' इत्यत्र 'युद्धकुशलं' इति मुद्रित-पुस्तकपाठो न साधुः। 'मुण्डानीकं' इत्यत्र 'चण्डानीकं' इति मुद्रितपुस्तक-पाठः ॥ २० स० १५ श्लो० ॥ १५ ॥

अचलव्यूहं अप्रतिहतव्यूहञ्चाभिधातुमाह, व्यूह इति। 'अनुपृष्ठमिति वीप्सा द्रष्टव्या। तथाच अनुपृष्ठं अनुपृष्ठं विन्यस्तैः 'पत्त्यश्व-रथ-दन्तिभिः' 'अचलः' अचलनामकः, 'व्यूहः', भवतीतिशेषः। तद्यथा पत्तीनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः दन्तिनः। 'तथा' अनुपृष्ठं अनुपृष्ठं विन्यस्तैः, 'हस्त्यश्व-रथ-पत्तिभिः', 'अप्रतिहतः' अप्रतिहताख्यः, 'व्यूहः', 'ज्ञेयः'। तद्यथा हस्तिनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः पत्तयः इति ॥ २० स० १६ श्लो० ॥ १६ ॥

अन्तभिदं व्यूहमभिधातुमाह, मध्येति। यस्य व्यूहस्य 'मध्यदेशे', 'हया-नीकं' अश्वसैन्यं, 'कक्षयोः', 'रथानीकं' रथारूढसैन्यं, 'पक्षयोः', 'गजानीकं' गजारूढसैन्यं, सोयं 'व्यूहः', 'अन्तभित्' 'अन्तं' शत्रुबलस्य मध्यं, भिनत्ति यः स तथाभूतः, 'स्मृतः', ॥ २० स० १७ श्लो० ॥ १७ ॥

बलानां कस्यचिदभावे व्यूहविधौ विधेयमाह, रथेति। श्लोकार्थः सुगमः ॥ २० स० १८ श्लो० ॥ १८ ॥

बलानां बाहुल्ये विधेयमाह, विभज्येति। 'पत्त्यश्व-रथ-कुञ्जरान्',

विभज्य', 'व्यूहे' साकारे व्यूहे, 'प्रक्षिपेत्'। 'यदि', 'दण्डबाहुल्यं' बलप्राचुर्य्यं, 'स्यात्'; 'तदा', व्यूहः 'आवापः', 'प्रकीर्त्तितः', अधिकबलानां आवपनात्। अस्य श्लोकस्य उत्तरार्द्धस्थाने अपरार्द्धं मुद्रितपुस्तके मुद्रितं, तदर्द्धन्तु अत्र न सङ्गतं। अस्य शेषार्द्धन्तु एकचत्वारिंशदङ्कितश्लोकस्य पूर्व्वार्द्धस्थाने मुद्रितं। तत्तु। "यदि स्याद्दण्डबाहुल्यं तदावापः प्रकीर्त्तितः", इति। 'व्यूहे' इत्यत्र 'मध्ये' इति मुद्रितपुस्तकपाठः॥ २० स० ३९ श्लो० ॥ ३९ ॥

महाव्यूहस्य भेदानभिधातुमाह, धनुरिति। श्लोकार्थः सुगमः। अयं श्लोकः हस्तलिखितपुस्तकद्वये नास्ति ॥ २० स० ४० श्लो० ॥ ४० ॥

साकारव्यूहानां तद्भेदानाञ्च उद्देशमभिधातुमाह, मण्डलेति। मण्डलश्च असंहतश्च 'मण्डलासंहतौ' वक्ष्यमाणलक्षणौ, 'भोगो दण्डश्च' एतावपि वक्ष्यमाणलक्षणौ। एते चत्वारः एव 'मनीषिभिः', 'प्रकृतिव्यूहाः' विकृतिरहिताः व्यूहाः, 'प्रकीर्त्तिताः'। 'मण्डलासंहतौ' इत्यत्र 'मण्डलोऽसंहतः' इति मुद्रितपुस्तकपाठः॥ २० स० ४१ श्लो० ॥ ४१ ॥

दण्डादिव्यूहानां स्वरूपमभिधातुमाह, तिर्य्यगिति। 'तिर्य्यक्', 'वृत्तिः' अवस्थितिः, यस्यासौ 'दण्डः' दण्डाख्यः व्यूहः, सैन्यानां दण्डवत्तिर्य्यगवस्थितिर्दण्ड इति भावः। 'भोगः' भोगाख्यः व्यूहः, 'अन्वावृत्तिः' 'अनु' पश्चाद्भावेनावृत्तिर्यस्यासावन्वावृत्तिः। 'भोगोऽन्वावृत्तिरेव च' इत्यत्र 'भोगत्वाद् वृत्तिरेव च' इति मुद्रितपुस्तकपाठो न सम्यक्। 'मण्डलः', 'सर्व्वतोवृत्तिः' सर्व्वतोमुखः, मण्डलाकारे व्यूहे सर्पशरीरवन्मण्डलस्थितानां गजादिसैन्यानामवस्थितिरिति भावः। 'पृथक् वृत्तिः' 'असंहतः' असंहताख्यः व्यूहः, अत्र व्यूहे समस्तसैन्यानां पृथग्भावेनावस्थितिरिति भावः। तद्यथा। क. उ. क.। अस्य श्लोकस्य शेषार्द्धं मुद्रितपुस्तके नास्ति। शेषार्द्धन्तु "मण्डलः सर्व्वतोवृत्तिः पृथक्वृत्तिरसंहतः" इति॥२० स० ४२ श्लो० ॥ ४२ ॥

दण्डव्यूहस्य भेदानभिधातुमाह, प्रदर इत्यादिना। दण्डस्य प्रदरेत्यादयः सप्तदश भेदा भवन्ति। अन्यत् प्रतीतं। 'दण्डभेदास्तुर्येयः' इत्यत्र

'दण्डभेदाः सुदुर्जयः' इति मुद्रितपुस्तकपाठः ॥ २० स० ४३-४४ श्लो० ॥ ४३-४४ ॥

प्रदरादीनां लक्षणान्याह, अतिक्रान्त इत्यादिना। 'अतिक्रान्तस्तु पक्षाभ्यां', अविपर्यये इत्यर्थः। स एव दण्डः पक्षाभ्यां 'अतिक्रान्तः' अतिक्रम्यगतः, प्रदरो भवति। उभयकक्षस्थपरानीकप्रदारणात् प्रदराख्य इतिभावः। तस्याकारो यथा | क क | । 'प्रतिक्रान्तः' पक्षाभ्यां प्रतिक्रान्तः पश्चाद्गतः, दृढको भवति। तस्याकारः तद्यथा | क. उ. क. | । 'अतिक्रान्तस्तु पक्षाभ्यां' इति, कक्ष-पक्षाभ्यां अतिक्रान्तः अस्यद्यो व्यूहः, तस्याकारः तद्यथा

| प ० प |
| क उ क |
| प्र |

। 'अयोन्यस्येति व्यूहत्रितयस्य विपर्य्ययः चापः, कक्षाभ्यां प्रतिक्रान्तत्वात् चापसंज्ञा। तद्यथा

| प उ प |
| क क |
| प्र |

। 'तद्विपर्य्ययः' दृढकविपर्य्ययः, अतिक्रान्तपक्षत्वात्। अस्यच विपर्य्ययः 'प्रतिष्ठः', प्रतिक्रान्तपक्षत्वात्। श्येनाकारत्वात् श्येनाख्यः। 'स्थूणापक्षः' पक्षयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणापक्षः। अयं विजयाख्यः व्यूहः। 'धनुःपक्षः' इति चापव्यूहः पक्षयोः-स्थाने यस्यासौ 'धनुःपक्षः', अयं सञ्जयाख्यः व्यूहः। 'द्विस्थूणः' इति द्विगुणितस्थूणः, अयं विशालविजयाख्यः व्यूहः। तस्याकारः तद्यथा | ☰ = ☰ = ☰ | 'दण्ड ऊर्द्धगः इति, ऊर्द्धगो दण्ड इत्येव सूचीव्यूहो भवति। तद्यथा | ☰ – – – ☰ | कर्णयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणाकर्णः 'अतिक्रान्तपक्ष इति, अयं चमूमुखः व्यूहः। 'अन्योस्य विपर्य्यय इति 'अस्य' चमूमुखस्य व्यूहस्य, 'विपर्य्ययः', उत्तरस्य पक्षाभ्यां प्रतिक्रान्तपक्षत्वात् सुखाख्यो व्यूहो भवति। तद्यथा | क. प. उ. क. प. | । 'द्विचतुर्दण्ड इति द्विगुणितदण्डो वलयो भवति। चतुर्गुणितदण्डो दुर्जयो भवति। तद्यथा

| क. प. उ. क. प. |
| प्र |

॥ २० स० ४५-४६-४७ श्लो० ॥ ४५-४६ ४७ ॥

भोगभेदानामुद्देशमाह, गोमूत्रिकेत्यादि। 'गोमूत्रिका' गवां मूत्रवद्रेखाकारो विद्यते यस्याः तथाभूता। 'अहिसारी' अहेः सरणस्यानयाहिसारीत्यभिधीयते। 'अहिसारी च' इत्यत्र 'अहिसञ्चारी' इति मुद्रितपुस्तकपाठः। अनयोः प्रयोगः तद्यथा | क | उ | क | प | उ | ॥ २० स० ४८ श्लो० ॥ ४८ ॥

दण्डेति। दण्डव्यूहः पक्षस्थाने यस्यासौ 'दण्डपक्षः' 'युगोरस्यः' इति उरस्यं द्विगुणितं विधेयमित्यर्थः अर्थापत्त्या कक्षानीके विधेयः। 'तद्विपर्य्ययः मकरः' इति सर्व्वशकटसंस्थविपर्य्ययमुखो मकरः। तथा 'व्यतिकीर्णः शेषः कुञ्जरवाजिभिरिति, परितः पताकाकारोयं व्यूहः मध्ये कुञ्जरवाजिभिर्व्यतिकीर्णो भवति, मकर एवेति। 'व्यवकीर्णः' इति, 'कुञ्जरराजिभिः' इति च मुद्रितपुस्तकपाठः। पूर्व्वश्लोके 'परिपताककः' इत्यत्र 'परिपतन्तकः' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० ४८ श्लो० ॥ ४९ ॥

मण्डलभेदानभिधातुमाह, मण्डलेति। 'मण्डलव्यूहभेदौ सर्व्वतोभद्रदुर्जयौ'। तत्र प्रथमः सर्व्वतोमुखः, गजानीकोयं दुर्जयः ॥ २० स० ५० श्लो० ॥ ५० ॥

असंहतभेदानभिधातुमाह, अर्द्धचन्द्रक इति। 'अर्द्धचन्द्रकः' अर्द्धचन्द्राकृतिः, तद्यथा | क क | उ |। 'उद्धारः' चतुःसैन्यः, तथा पञ्चसैन्यः, तथा कर्कटाख्यः, तथा काकपादिका, तथा गोधिका, इत्यादयो व्यूहास्त्वाकारभेदेन ज्ञेयाः। कर्कटशृङ्ग्याद्याकारसदृशरचिततत्तत्सैन्यं व्यूहानां कर्कटशृङ्ग्यादीनि नामधेयानि भवन्तीति फलितार्थः ॥ २० स० ५१-५२ श्लो० ॥ ५१-५२ ॥

एत इति। 'प्रयोक्तृतिः' व्यूहविधानज्ञैः, 'एते सप्तदश', 'भेदतः' विभागतः, 'प्रोक्ताः' प्रकर्षेण कथिताः। 'तथा', 'मण्डलस्य' मण्डलाख्यस्य व्यूहस्य, 'भेदतः', 'व्यूहद्वयं', प्रोक्तं। 'असंहताः' असंहताख्याः 'व्यूहाः' 'षट्' बहुविधाः। 'भोगव्यूहाः' भोगाख्यव्यूहाः, 'पञ्चधा' पञ्चप्रकाराः।

'युद्धकाल उपस्थिते' युद्धसमये आगते। 'व्यूहाः', 'प्रायोज्याः स्युः' प्रागुक्ता व्यूहाः प्रयोक्तव्या भवेयुः। 'दण्डव्यूहाश्च भेदतः' इत्यत्र, दण्ड-व्यूहाश्च पञ्चधा' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५३-५४ श्लो० ॥५३-५४॥

पश्चादीनामिति। 'पश्चादीनाममीकेन' पश्चादिस्थितसैन्येन, 'हत्वा' विनाश्य, 'शेषैः' अवशिष्टानीकैः, 'परिक्षिपेत्' वेष्टयेत्। 'उरसा' उरः-स्थितानीकेन, 'समाहत्य', 'कोटीभ्यां' कोटिद्वयस्थसैन्यैः, 'परिवेष्टयेत्', शत्रुसैन्यानीतिशेषः। 'शेषैः' इत्यत्र 'शेषं' इति, 'परिवेष्टयेत्' इत्यत्र 'परि-वेष्टयन्' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५५ श्लो० ॥ ५५ ॥

परकोटीत्यादिश्लोकद्वयं प्रतीतार्थं। 'व्यूहप्रयत्नेन' इत्यत्र 'व्यूहप्रयोगेण' इति पाठान्तरं। 'व्यूहततैः' इत्यत्र 'व्यूहजातं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५६-५७ श्लो० ॥ ५६-५७ ॥

यत इति। विजिगीषुः उभयपक्षेऽपि 'यतः' यत्र, 'फल्गु' असारं सैन्यं, तथा 'यतः' यत्र, 'अभिन्नं' संहतं सैन्यं, एवं 'यतः' यत्र, 'व्यूहैरधिष्ठितं', 'ततः' तत्र, 'रिपुबलं हन्यात्'। 'आत्मानञ्चापि' स्वकीयबलञ्चापि, 'संह-येत्' वर्द्धयेत्। 'व्यूहैरधिष्ठितं' इत्यत्र 'दुष्टैरधिष्ठितं' इति मुद्रितपुस्तक-पाठः॥ २० स० ५८ श्लो० ॥ ५८ ॥

सारमिति। 'सारं' सारवदरिसैन्यं, 'द्विगुणसारेण' अरिसैन्यसारात् द्विगुणसारवता निजबलेन, 'फल्गु' असारमरिसैन्यं, 'सारेण' सारवता निजबलेन, 'पीड़येत्' घातयेत्। 'संहतं' अभिन्नमरिसैन्यं, 'प्रचण्डैः' भीषणैः, 'गजानीकैः' गजसैन्यैः, 'वारयेत्' पीड़येत्। 'सारं' इत्यत्र 'अरिं' इति मुद्रितपुस्तकपाठो न समीचीनः॥ २० स० ५९ श्लो० ॥ ५९ ॥

दुर्जयानिति। 'सिंहवसासिक्तैः' 'सिंहस्य', 'वसया' मेदसा, 'सिक्तैः' उक्षितैः। अन्यत् स्पष्टं। २० स० ६० श्लो० ॥ ६० ॥

सलोहेति। 'सलोहजालैः' लोहजालावृतैः, 'दृढबद्धदन्तैः', 'सुकल्पितैः' सुसज्जितैः, 'ऊर्जितपादरक्षैः' सुदृढचर्म्मसंनद्धपादैः, 'प्रवीरयोधैः' प्रकृष्ट-

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

No. 179.




# THE NI'TISA'RA,

OR

# THE ELEMENTS OF POLITY,

BY KA'MANDAKI.

EDITED BY

RA'JENDRALA'LA MITRA.

FASCICULUS II.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1861.

## SANSKRIT WORKS PUBLISHED,

IN THE NEW SERIES.

The Vais'eshika Sútras, with Commentaries, by Pandita Jaya Narayana Tarkapanchanana. Complete in five Fasc. Nos. 4, 5, 6, 8 and 10.

The Sáṇḍilya Sútras with Swapnes'wara's Commentary. Edited by Dr. J. R. Ballantyne, LL. D. Complete in one Fasc. No. 11.

---

## SANSKRIT WORKS IN PROGRESS.

A translation of the Súrya Siddhánta and Siddhánta S'iromaṇi, by Pandita Bápú Deva Sástri, under the superintendence of Archdeacon Pratt. Fasc. I. II. Nos. 1 and 13, containing the Súrya Siddhánta and the first portion of the Siddhánta S'iromani.

The Dása Rúpa with the exposition of Dhanika. Edited by F. E. Hall, D. C. L. Fasc. 1. No. 12.

BIBLIOTHECA INDICA;

# A COLLECTION OF ORIENTAL WORKS,

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

---

## SANSKRIT WORKS IN PROGRESS,*

IN THE OLD SERIES.

The LALITA VISTARA, or Memoirs of the Life and Doctrines of SÁKYA SINHA. Edited by Bábu RÁJENDRALALA MITRA. Already published, Fasciculi I. II. III. IV. and V. Nos. 51, 73, 143, 144 and 145.

The Prákrita Grammar of Kramadís'wara. Edited by Bábu RÁJENDRALÁLA MITRA.

An English translation of the CHHÁNDOGYA UPANISHAD of the Sáma Veda, by Bábu RÁJENDRALÁLA MITRA. Already published, Fasciculus I. No. 78.

The VEDÁNTA SU'TRAS. Commenced by DR. RÖER, and continued by Pandita Ráma Náráyana Vidyáratna, Published, Fasciculi I. II. III. and IV. Nos. 64, 89, 172, and 174.

The TAITTIRÍYA SANHITÁ of the Black Yajur Veda. Edited by Dr. E. RÖER, and E. B. COWELL, M. A. Published, Fasciculi I. II. III. IV. V. VI. VII. VIII. IX. X. XI. XII. XIII. and XIV. Nos. 92, 117, 119, 122, 131, 133, 134, 137, 149, 157, 160, 161, 166 and 171.

The TAITTIRÍYA BRÁHMANA of the Black Yajur Veda. Edited by Bábu RÁJENDRALÁLA MITRA. Published, Fasciculi I. II. III. IV. V. VI. VII. VIII. IX. X. and XI. Nos. 125, 126, 147, 150, 151, 152, 153, 154, 155, 175 and 176.

The MA'RKANDEYA PURA'NA. Edited by the Rev. K. M. BANNERJEA. Already published, Fasciculi I. II. III. IV. and V. Nos. 114, 127, 140, 163 and 169.

An English Translation of the SÁHITYA DARPANA by DR. BALLANTYNE.

* For a list of the Persian and Arabic works in progress, see No. 130 of the Bibliotheca Indica.

## SANSKRIT WORKS PUBLISHED,

### IN THE OLD SERIES.

| | *Former Price.* | *Reduced Price.* |
|---|---|---|
| The first two Lectures of the Sanhita of the Rig Véda, with the Commentary of Mádhava A'chárya, and an English translation of the text. Edited by Dr E. Röer, Nos. 1 to 4, .......... | 4 0 0 | 2 8 0 |
| The Brihad A'ranyaka Upanishad, with the Commentary of S'ankara A'chárya, and the Gloss of A'nanda Giri. Edited by Dr. E. Röer, Nos. 5 to 13, 16 and 18, ...... | 11 0 0 | 6 14 0 |
| An English Translation of the above Upanishad and Commentary. Nos. 27, 38 and 135, .......... | 3 0 0 | 1 14 0 |
| The Chhándogya Upanishad, with the Commentary of S'ankara A'chárya, and the Gloss of A'nanda Giri. Edited by Dr. E. Röer, Nos. 14, 15, 17, 20, 23 and 25, .......... | 6 0 0 | 3 12 0 |
| The Taittiríya, Aitaréya and S'wétas'watara Upanishads with Commentary, &c. Nos. 22, 33, and 34, .......... | 3 0 0 | 1 14 0 |
| The I's'a, Kéna, Katha, Pras'na, Mundaka, and Mándukya Upanishads, with Commentary, &c. Edited by Dr. E. Röer, Nos. 24, 26, 28, 29, 30 and 31, .......... | 6 0 0 | 3 12 0 |
| The Taittiríya, Aitareya, S'wetas'watara, Kena, I's'á, Katha, Pras'na, Mundaka and Mándukya Upanishads. Translated from the Original Sanskrit, by Dr. E. Röer, Nos. 41 and 50, .......... | 2 0 0 | 1 4 0 |
| Division of the Categories of the Nyáya Philosophy, with a Commentary and an English Translation, by Dr. E. Röer, Nos. 32 and 35, .......... | 2 0 0 | 1 4 0 |
| The Sáhitya-Darpana, or Mirror of Composition, by Viswanátha Kavirája, edited by Dr. E. Röer, Nos. 36, 37, 53, 54 and 55, .......... | 5 0 0 | 4 0 0 |
| The Chaitanya Chandrodaya Nátaka of Kavikarnapura, Edited by Bábu Rájendralál Mitra, Nos. 47, 48 and 80, .... | 3 0 0 | 1 14 0 |
| The Uttara Naishadha Charita, by Sri Harsha, with the Commentary of Náráyana. Edited by Dr. E. Röer, Nos. 39, 40, 42, 45, 46, 52, 67, 72, 87, 90, 120, 123 and 124, .......... | 12 0 0 | 7 8 0 |
| The Sánkhya-Pravachana-Bháshya. Edited by Fitz-Edward Hall, A. M., and to be translated by J. R. Ballantyne, LL. D. Nos. 94, 97 and 141, .......... | 0 0 0 | 1 14 0 |
| The Sarvadars'ana Sangraha; or an Epitome of the different systems of Indian Philosophy. By Mádhavácharya. Edited by Pandita I's'warachandra Vidyáságara. Nos. 63 and 142, .......... | 0 0 0 | 1 4 0 |
| The Súrya-siddhánta, with its Commentary the Gúdhárthaprakás'aka. Edited by FitzEdward Hall, A. M. Nos. 79, 105, 115 and 146, .......... | 0 0 0 | 2 8 0 |
| The Tale of Vásavadattá, by Subandhu, with its Commentary entitled Darpana. Edited by FitzEdward Hall, A. M. Nos. 116, 130, 148 .......... | 0 0 0 | 1 14 0 |
| The Elements of Polity, by Kámandakí. Edited by Bábu Rájendralála Mitra. Already published, Fasciculus I. II. being Nos. 19 and 179, .......... | 0 0 0 | 1 4 0 |

धीराधिष्ठितैः, 'मददुर्निवारैः' मदोत्कटैः, 'गजेन्द्रैः', 'द्विषतां' शत्रूणां, 'अनीकं हन्यात्' ॥ २० स० ६१ श्लो० ॥ ६१ ॥

एकोपीति। 'एकोपि' असहायोपि, 'मदसत्त्वगुणोपपन्नः' मद-बलगुण-सम्पन्नः, 'वारणपतिः' गजेन्द्रः, 'द्विषतामनीकिं', 'व्यस्तं' सम्यक्, 'निहन्ति'। 'हि' यतः, 'क्षितिभुजां' राज्ञां, 'विजयः', 'नागेषु' हस्तिषु, 'निबद्धः', 'तस्मात्', 'नृपतिः', 'सदा', 'गजाधिकबलः', 'स्यात्' ॥ २० स० ६२ श्लो० ॥ ६२ ॥

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानुसारिण्यां * विंशः सर्गः।

मुद्रितपुस्तकानुसारेण ऊनविंशः सर्गः।

समाप्ता चेयं कामन्दकीयनीतिसारटीका।